| | | |
|---|---|---|
| विऽचक्षणाः | विद्वान् | विद्वान |
| रुद्रेभिः | रुद्रैः | रुद्रों के द्वारा |
| २ योषा | स्त्री | स्त्री |
| तनुते | विस्तारयति | फैलाती है |
| पृथु | विस्तीर्णम् | विस्तीर्ण को |
| ज्रयः | प्रभावम् (जि—अभिभवे, असुन् प्रत्ययः) | प्रभाव को |
| इन्द्रम् | इन्द्रम् | इन्द्र को |
| मनीषा | स्तुतिरूपावाक् [सा०भा] | स्तुतिरूप वाणी |
| अभि | अभि+ | – |
| अर्चति | अभि+अर्चति | अर्चन करती है |
| श्रुतम् | विख्यातम् | विख्यात को |

संस्कृतार्थः ।

विद्वान् (इन्द्रः) रुद्राणाम् (मार्ग) निर्देशेन गच्छति (विद्युद्रूपा) स्त्री रुद्राणं साहाय्येन (इन्द्रस्य) महान्तं प्रभावं विस्तारयति, विख्यातमिन्द्रं स्तुति रूपा-वागभ्यर्चतिमरुद्भिर्युक्तम् (तंवयम्) मित्रतार्थमाह्वयामः ॥ ७ ॥

भाषार्थः ।

विद्वान(इन्द्र) रुद्रों के (रस्ता) दिखाने से चलते हैं,(विद्युतरूपा) स्त्री रुद्रों की सहायता से (इन्द्र के) महान प्रभाव को फैलाती है, विख्यात इन्द्र को स्तुति (रूपवाणी) अर्चन करती है मरुतों से युक्त (उस) को हम मित्रता के लिये बुलाते हैं ॥७॥

(१) रुद्रों से तात्पर्य्य आकाश के रुद्ररूप से उत्पन्न हुए मरुतों का है जो इन्द्र के आगे २ रस्ता दिखाते हुए चलते हैं जैसे राजा के आगे सैनिक ॥

(२) आंधी के साथ विद्युत की गरज अधिक भय उत्पन्न करने वाली होने से इन्द्र का दबाव अधिक फैलता है।

इन्द्रोदेवता त्रिष्टुप्छन्दः । ११।११।११।११

यद्वामरुत्वः परमे सधस्थे यद्वा-

वमेवृजने मादयासे । अत आयाह्य-

स्वरंनोअच्छा त्वायाहविष्चक्रमा सत्यराधः । ८ ।

| | | |
|---|---|---|
| यत् | यत्+वा | अथवा |
| वा | +वा | – |
| मरुत्वः | हे मरुद्भिर्युक्त | हे मरुतों से युक्त |
| परमे | ऊर्ध्वतमे | सबसे ऊपरवाले में |
| सधस्थे | सदसि (सहस्य सधादेशः) | सभा स्थानमें |
| यत् | यत् + वा | अथवा |
| वा | +वा | – |
| अवमे | अधस्तने | नीचे वाले में |
| वृजने | आकाशे (भा०को०) | आकाश में |

| | | |
|---|---|---|
| मादयासे | मोद से (लेट्याडागमः) | मोद करते हो |
| अतः | ततः (तकारलोपच्छान्दसः) | वहां से |
| आ | आ+ | — |
| याहि | आ+याहि | आओ |
| अध्वरम् | यज्ञम् | यज्ञ को |
| नः | अस्माकम् | हमारे |
| अच्छ | अभिलक्ष्य | लक्ष रखकर |
| त्वाऽया | त्वत्कामनया। (क्वचित्वादेशो व्यत्ययेन दकारस्यात्वं सुपामितितृतीयायालुक्) | तेरी कामना से |
| हविः | हविः | हवि को |
| चकृम | कृतवन्तः स्मः | हम ने बनाया है |
| सत्यऽराधः | हे सत्य धन ! | हे सच्चे धन वाले |

संस्कृतार्थः ।

हे मरुद्भिर्युक्त ! इन्द्र ! यद्वा (त्वम्) उर्ध्वतमे सदसि यद्वाऽधस्तन आकाशे मोदसे ततोऽस्मद्यज्ञमभिलक्ष्याऽऽया हि हे सत्यधन ! वयं त्वत्कामनया हविः कृतवन्तः ॥ ८ ॥

भाषार्थः ।

हे मरुतों से युक्त (इन्द्र !) चाहे आप सबसे ऊपर वाले सभा स्थान में अथवा नीचे के आकाश में मोद करते हैं वहां से हमारे यज्ञ की ओर आओ, हे सच्चे धन वाले ! आपकी कामना से हम ने हवि बनाई है ॥ ८ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।१११११११११

त्वायेन्द्रसोमंसुषमासुदच्च त्वा-

याहविश्चकृमाब्रह्मवाहः । अधानि-

युत्वःसगणोमरुद्भि रस्मिन्यज्ञेब-

र्हिषिमादयस्व ।९।

| | | |
|---|---|---|
| त्वाऽया | त्वत्कामनया | तेरी कामना से |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| सोमम् | सोमम् | सोम को |
| सुसम | अभिषुतवन्तःस्मः (षुञ् अभिषवे) | हमने निचोड़ा है |
| सुऽदक्ष | हे सुबल | हे अत्यन्त बल-वाले |
| त्वाऽया | त्वत्कामनया | तेरी कामना से |
| हविः | हविः | हवि को |
| चकृम | कृतवन्तःस्मः | हम ने बनाया है |
| ब्रह्मऽवाहः | हे स्तोत्रेण प्राप्य-माण ! | हे स्तोत्र से प्राप्त होने वाले |
| अध | अथ [थस्य धत्वम्] | अब |
| नियुत्वः | हे अश्वोपेत ! | हे घोड़ों वाले |

| | | |
|---|---|---|
| स॒ऽग॑णः | गण सहितः | गण से युक्त |
| म॒रुत्ऽभि॑: | मरुद्भिः | मरुतों के द्वारा |
| अ॒स्मिन् | अस्मिन् | इस में |
| य॒ज्ञे | यज्ञे | यज्ञ में |
| ब॒र्हिषि॑ | बर्हिषि | कुशा पर |
| मा॒द॒य॒स्व॒ | मोदस्व | मोद करो |

संस्कृतार्थः ।

हे सुबलेन्द्र ! त्वत्कामनया वयंसोममभिषुतवन्तः हेस्तोत्रेण प्राप्यमाण ! त्वत्कामनया वयं हविः कृतवन्तः, हे अश्वोपेत ! इदानीं मरुद्भिर्गणसहितः(त्वम्) अस्मिन्यज्ञे बर्हिषि मोदस्व ॥ ९ ॥

भाषार्थः ।

हे अत्यन्त बलवाले इन्द्र ! आपकी कामना से हमने सोमको निचोड़ा है हे स्तोत्रसे प्राप्त होने वाले ! आपकी कामना से हम, ने हवि बनाई है हे घोड़ों

वाले ! अब मरुद्गण के साथ इस यज्ञ में बर्हि पर मोद करो ॥

इन्द्रोदेवता त्रिष्टुप् छन्दः ११।११।११।११

मादयस्व हरिभिर्येतइन्द्र विष्य-
स्वशिप्रे विसृजस्व धेने। आत्वा सुशि-
प्र हरयो वहन्तू शन्हव्यानिप्रति-
नोजुषस्व ॥ १० ॥

| | | |
|---|---|---|
| मादयस्व | मोदस्व | मोदकरो |
| हरिऽभिः | अश्वैः | घोडों के साथ |
| ये | ये | जो |
| ते | तव | तेरे |

| | | |
|---|---|---|
| इन्द्र | हे इन्द्र | हे इन्द्र |
| वि | वि + | – |
| स्यस्व | वि + स्यस्व विवृते कुरु | चौड़ा करो |
| शिप्रे० | हनू | जबड़ों को |
| वि | वि + | – |
| सृजस्व | वि + सृजस्व | खोलो |
| धेने | ओष्ठौ | होठों को |
| आ | आ + | – |
| त्वा | त्वाम् | तुझ को |
| सुऽशिप्र | हे शोभनहन् | हेसुन्दरजबड़ेवाले |
| हरयः | अश्वाः | घोड़े |

| | | |
|---|---|---|
| वहन्तु | आ + वहन्तु आनयन्तु | लावें |
| उशन् | कामयन् | कामना करता हुआ |
| हव्यानि | हव्यानि | हवियों को |
| प्रति | प्रति + | -- |
| नः | अस्माकम् | हमारी |
| जुषस्व | प्रतिजुषस्व | फिर सेवन करो |

संस्कृतार्थः ।

हे इन्द्र ये तव अश्वाः (सन्ति) तैर्मोदस्व, (स्व-) हनू विवृतेकुरु ओष्ठौचविसृजस्व, हशोभन हनू ! त्वामश्वा आवहन्तु ( त्वम् ) अस्माकं हव्यानि पुनः सेवस्व ॥१०॥

भाषार्थः ।

हे इन्द्र ! जो आपके घोड़े (हैं) उनके साथ मोद करो (अपने) जबड़ों को चौड़ा करो और होठों को खोलो, हे सुन्दर जबडे वाले ! आप को घोड़े लावें आप हमारी हवियों को फिर सेवन करें ॥ १० ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः । ११।११।११।११

मरुत्स्तोत्रस्यवृजनस्यगोपा वय-

मिन्द्रेणसनुयामवाजम् । तन्नोमि-

त्रोवरुणोमामहन्ता मदितिःसिन्धुः

पृथिवीउतद्यौः । ११ ।

२६/८७

| | | |
|---|---|---|
| मरुत्ऽ-स्तोत्रस्य | मरुतां स्तोत्रस्य | मरुतों के स्तोत्र की |
| वृजनस्य | प्राकारस्य (आ०को०) | कोट की |
| गोपाः | गोपितारः | रक्षा करने वाले |
| वयम् | वयम् | हम |
| इन्द्रेण | इन्द्रेण | इन्द्र के द्वारा |

| | | |
|---|---|---|
| सनुयाम | सम्भजेम (षणसम्भक्तौ, व्यत्ययेन उः प्रत्ययः) | सेवन करें |
| वाजम् | अन्नम् | अन्न को |
| तत् | एतत् (एकारलोपश्छान्दसः) | इस को |
| नः | अस्माकम् | हमारी |
| मित्रः | मित्रः | मित्र |
| वरुणः | वरुणः | वरुण |
| मामहन्ताम् | आद्रियन्ताम् | आदर करें |
| अदितिः | अदितिः | अदिति |
| सिन्धुः | सिन्धुः | समुद्र |
| पृथिवी | पृथिवी | पृथिवी |
| उत | अपिच | और |

| द्यौः | द्यौः | द्यौ |
|---|---|---|

संस्कृतार्थः ।

मरुत्स्तोत्ररूपस्य प्राकारस्य रक्षितारो वयमिन्द्रेणाऽन्नं लभेमहि, एतदस्माकम् (अभ्यर्थनम्) मित्रो वरुणोऽदितिःसिन्धुः पृथिवी द्यौश्चाऽऽद्रियन्ताम् ॥ ११

भाषार्थः ।

मरुतस्तोत्र रूप कोटकी रक्षा करने वाले हम इन्द्र के द्वारा अन्नको प्राप्त करें इस हमारी (प्रार्थना को) मित्र, वरुण, अदिति, समुद्र, पृथिवी और द्यौ आदर करें ॥ ११ ॥

"मरुत्स्तोत्र" अर्थात ऐसा स्तोत्र जिसमें मरुतोंको भी स्तुति है अथवा जिस स्तोत्र को ऋषि ने मरुतों से पाया है अथवा मरुतों केद्वारा इन्द्र की महिमा को अनुभव करके हृदय में भान किया है।

इत्येकाधिकशततमं सूक्तम् ।



# ऋ० मं० १ सू० १०२

## इन्द्रोदेवता कुत्सऋषिः ।

## विनियोगो लैङ्गिकः ।

## सूक्तस्य भावार्थः ।

यमनुसृत्य देवाः सोमोत्सवेषु बलेन मदयुक्ता भवन्ति तस्मै महत इन्द्रायेमां महतीं स्तुतिमर्पयामि ।१। सरस्वत्यादयः सप्त नद्योऽस्य यशः प्रख्यापयन्ति, द्यावापृथिव्यावस्य दर्शनीयं रूपं प्रकटयतः सूर्याचन्द्रमसौ मनुष्यान्दययाऽवलोकितुं पुनःपुनरुदितौ भवतः, यतस्त इन्द्रं श्रद्दधतु ।२। संग्रामे जयशीलो हर्षकारकश्चेन्द्रस्य रथोऽस्मदर्थं धनलाभाय प्रेरितो भवतु, अस्माकं मनसा बहुस्तुतश्च धनवानिन्द्रः कामयमानेभ्योऽस्मभ्यं शरणं प्रयच्छतु ३ वयं प्रतिसंग्रामे सहयोद्ध्रेन्द्रेण युक्ताः सन्तो धनं जयेम सोऽस्मदीयस्य पक्षस्य सुरक्षको भूत्वाऽस्मभ्यं धनानि सुखेन प्राप्तव्यानि करोतु, अस्मच्छत्रूणां वीर्याणि च भनक्तु ।४। धनानां धारयितारमिन्द्रमिमे नाना मनुष्यसमूहा रक्षार्थं स्तुवन्त आह्वयन्ते, परन्तु सोऽस्मभ्यमेव धनप्राप्तये रथमारोहतु, अस्मत् साहाय्यार्थं निश्चलमस्य मनो विजयि भवत्येव ।५। इन्द्रोऽमितबलस्त्रुटिरहितो जयशीलबाहुः प्रतिकर्मणि शतरक्षाभिरागन्ता जनेषु क्षोभस्योत्पादको बलस्य प्रतिमानं चाऽस्ति,अतोधनकामा जना एनमाह्वयन्ति।६। इन्द्रस्य यशः प्रजासु शतात्सहस्रादप्यधिकं वर्तते तमियत्ता रहितं महती वेदवाण्येव प्रकाशयति, इदानीं सोऽस्माकं शत्रून् हन्तु ।७। पृथिव्यन्तरिक्षंद्यौश्चेत्येतास्तिस्रो भूमय इन्द्रस्य त्रिगुणितबलस्य मानरूपाः सन्ति, एवमग्निर्विद्युत् सूर्यश्च अस्य प्रतिमानरूपाः सन्ति, स विश्वं भुवनमतीत्य जन्मनैव शत्रु-

रहितोविद्यते।८। वयं संग्रामेषु जयशील देवेषु प्रथममिन्द्रमाह्वयामः सोऽस्मदीयमिमं स्तोतारं बुद्धिमन्तं कल्पना चतुरंच करोतु,युद्धारम्भे चाऽस्मद् रथमग्रवर्तिनं करोतु।९। इन्द्रो ऽल्पेषु महत्सु च युद्धेषु जयं प्राप्य धनान्यस्मत्तो न निवारयति सोऽस्मद्रक्षाऽर्थमुत्तेजितो भूत्वा युद्धस्याऽऽह्वानेष्वस्माकं रथं प्ररयतु।१०। इन्द्रः सर्वेषु दिनेष्वस्मत् पक्षावलम्बी भवतु वयंचाऽकुटिलाः सन्तोऽन्नं सम्भेजम, एतदस्माकमभ्यर्थनं मित्रो वरुणोऽदितिः सिन्धुः पृथिवी द्यौश्चाऽऽद्रियन्ताम् ॥ ११ ॥

इन्द्रोदेवता जगतीछन्दः।१२।१२।१२।१२

इमांतेधियंप्रभरेमहोमहीमस्य स्तोत्रेधिषणायत्तआनजे।तमुत्सवेचप्रसवेचसासहिमिन्द्रंदेवासः शवसामदन्ननु।१।

| | | |
|---|---|---|
| इमाम् | इमाम् | इस को |
| ते | तुभ्यम् | तेरे लिये |

| | | |
|---|---|---|
| धियम् | स्तुतिम् (आ०को०) | स्तुति को |
| प्र | प्र+ | – |
| भरे | प्र+भरे, अर्पयामि | अर्पण करता हूं |
| मह्नः | महतः (अर्थम्) | महान के (लिये) |
| मह्नीम् | महतीम् | बड़ी को |
| अस्य | अस्मिन् (सप्तम्यर्थेषष्ठी) | इस में |
| स्तोत्रे | स्तोत्रे | स्तोत्र में |
| धिषणा | बुद्धिः | बुद्धि |
| यत् | यतः | क्योंकि |
| ते | तव | तेरी |
| आनजे | प्राप्तवती (अञ्जूगतौ) | प्राप्त हुई है |

| | | |
|---|---|---|
| तम् | तम् | उस को |
| उत्ऽसवे | उत्सवे | उत्सव में |
| च | (पूरणः) | — |
| प्रऽसवे | सोमाभिषवे (आ०को०) | सोम के निचोड़ने में |
| च | च | और |
| ससह्निम् | अभिभवशीलम् (षह अभिभवे, किप्रत्यये सतिद्धित्वम्) | जयशील को |
| इन्द्रम् | इन्द्रम् | इन्द्र को |
| देवासः | देवाः (जसोऽसुगागमः) | देवता |
| शवसा | बलेन | बल के द्वारा |
| अमदन् | मदयुक्ता अभवन् | मद से युक्त हुए हैं |
| अनु | अनुसृत्य | पीछे |

संस्कृतार्थः ।

(हे इन्द्र !) (अहम्) इमां महतीं स्तुतिं महते तुभ्यमर्पयामि यतस्तवबुद्धिरस्मिन्स्तोत्रे प्राप्तवती, देवा अभिभवशीलं तमिन्द्रमनुसृत्योत्सवे सोमाभिषवे च बलेन मदयुक्ता अभवन् ॥ १ ॥

भाषार्थः ।

(हे इन्द्र !) मैं इस महान स्तुति को महान आपके लिये अर्पण करता हूं क्योंकि आप की बुद्धि इस स्तोत्र में लगी है, देवता उस जयशील इन्द्र के पीछे उत्सव में और सोमके निचोड़ने में बलके कारण मद से युक्त हुए हैं ॥१॥

इन्द्रोदेवता जगतीछन्दः ।१२।१२।१२।१२

अस्यश्रवोनद्यःसप्तबिभ्रति द्यावाक्षामापृथिवीदर्शतंवपुः । अस्मेसूर्याचन्द्रमसाऽभिचक्षे श्रद्धेकमिन्द्रचरतोवितर्तुरम् ।२।

| | | |
|---|---|---|
| अस्य | अस्य | इस के |
| श्रवः | यशः | यश को |
| नद्यः | नद्यः | नदियाँ |
| सप्त | सप्त | सात |
| बिभ्रति | धारयन्ति | धारण करती हैं |
| द्यावाक्षामा | द्यावापृथिवी (सुपामिति विभक्तेर्डा-देशः) | द्यौ (और) पृथिवी |
| पृथिवी | अन्तरिक्षम् (निघं० १।३) | अन्तरिक्ष |
| दर्शतम् | दर्शनीयम् | दर्शनीय को |
| वपुः | रूपम् (निघं० ३।७) | रूप को |
| अस्मे | अस्मान् (द्वितीयायाःशेआदेशः) | हम को |
| सूर्याचन्द्रमसा | सूर्याचन्द्रमसौ (विभक्तेरात्वम्) | सूर्य(और)चन्द्रमा |

| | | |
|---|---|---|
| अभिऽचक्षे | दययाऽवलोकितुम् (आ०को०) | दया के साथ देखने के लिये |
| श्रद्धे | श्रद्धार्थम् (श्रत्पूर्वाद्धधातेर्भावे विचि सति धातोराकारस्य लोपः) | श्रद्धा के लिये |
| कम् | (पूरणः) | — |
| इन्द्र | हे इन्द्र ! | हे इन्द्र ! |
| चरतः | चरतः | विचरते हैं |
| विऽतर्तुरम् | पुनः पुनरागमनं यथास्यात्तथा (यङ्लुगन्तात्तरतेरौणादिकः कुरच् प्रत्ययः) | बार २ आकर |

संस्कृतार्थः ।

सप्त नद्योऽस्य (इन्द्रस्य) यशो द्यावापृथिव्यावन्तरिक्षम् (चाऽस्य) दर्शनीयं रूपं धारयन्ति, हेइन्द्र ! अस्मान् दययावलोकितुं श्रद्धाजननाय (च) सूर्याचन्द्रमसौ पुनः पुनरागत्य चरतः ॥ २ ॥

भाषार्थः ।

सात नदियाँ इस (इन्द्र) के यश को (और) द्यौ, पृथिवी (और) अन्तरिक्ष (इसके) रूप को धारण करती हैं, हे इन्द्र! हमको दया के साथ देखने के लिये (और) श्रद्धा उत्पन्न करने के लिये सूर्य और चन्द्रमा बार बार आकर विचरते हैं ॥ २ ॥

सात नदियाँ अर्थात शतद्रु (सतलुज) विपासा (वियास) परुष्णी (रावी) असिक्नी (चनाब) वितस्ता (जेहलम) सरस्वती और सिन्धु ।

इन्द्रोदेवता जगताछन्दः ।१२।१२।१२।१२

तंस्मारथंमघवन्प्रावसातये जैत्रं यंतेअनुमदामसङ्गमे । आजानइन्द्र मनसापुरुष्टुत त्वायद्भ्योमघव-ञ्छर्म्मयच्छनः । ३ ।

| | | |
|---|---|---|
| तम् | तम् | उस को |
| स्म | (पूरणः) | – |
| रथम् | रथम् | रथ को |

| | | |
|---|---|---|
| मघ॒ऽव॒न् | हे धनवन् ! | हे धन वाले |
| प्र | प्र+ | — |
| अ॒व॒ | प्र+अव, प्रेरय (अवगतौ, अन्तर्भावित-ण्यर्थः) | प्रेरण करो |
| सा॒तये॑ | धनप्राप्तये | धन की प्राप्ति के लिये |
| जैत्र॑म् | जयशीलम् | जीतने वाले को |
| यम् | यम् | जिस को |
| ते॒ | तव | तेरे |
| अ॒नु॒ऽमदा॑म | अनुसृत्य मद-युक्ताभवाम | हम पीछे २ मद युक्त हों |
| स॒म्ऽग॒मे | सङ्ग्रामे (निघं० २।१७) | युद्ध में |
| आ॒जा | सङ्ग्रामे (निघं० २।१७ विभक्तेर्डात्वम् ) | युद्ध में |
| नः॒ | अस्माकम् | हमारे |

| | | |
|---|---|---|
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| मनसा | मनसा | हृदय से |
| पुरुऽस्तुत | हे बहुस्तुत ! | हे अत्यन्त स्तुति किये गए |
| त्वायत्ऽभ्यः | त्वांकामयमानेभ्यः (क्यचिपरेयुष्मच्छब्दस्य त्वादेशेसतिलटःशतृ। | तेरी कामना करने वालोंके ताईं |
| मघऽवन् | हे धनवन् ! | हे धन वाले |
| शर्म | शरणम् | शरण को |
| यच्छ | देहि | दो |
| नः | अस्मभ्यम् | हमारे लिये |



संस्कृतार्थः।

हे धनवन्! सङ्ग्रामे जयशीलं यं त्वरथमनुसृत्य(वयम्) मदयुक्ता भवाम तम् (अस्मभ्यम्) धनप्राप्तये प्रेरय,हेसङ्ग्रामेऽस्माकं मनसा बहु स्तुत!धनवन्निन्द्र!त्वां कामयमानेभ्योऽस्मभ्यं शरणं प्रयच्छ॥३।

भाषार्थः।

हे धनवान ! युद्ध में जीतने वाले जिस आपके रथके पीछे२ हम मद युक्त होवें उसको (हमारे ताईं) धन की प्राप्ति के लिये प्रेरण करो, हे युद्ध में हमारे हृदय से अन्त्यन्त स्तुति किये गए ! धनवान इन्द्र ! आपकी कामना करने वाले हम को शरण दो ॥ ३ ॥

इन्द्रोदेवता जगतीछन्दः ।१२।१२।१२।१२।

वयंजयेमत्वयायुजावृत मस्मा-
कमंशमुद्वाभरेभरे। अस्मभ्यमिन्द्र
वरिवःसुगंकृधि प्रशत्रूणांमघवन्वृ-
ष्णयारुज ॥ ४ ॥

| | | |
|---|---|---|
| वयम् | वयम् | हम |
| जयेम | जयेम | जीतें |
| त्वया | त्वया | तेरे द्वारा |

| | | |
|---|---|---|
| युजा | सहयोद्ध्रा | साथलड़नेवाले से |
| वृतम् | धनम् (निघं०२।१०) | धन को |
| अस्माकम् | अस्माकम् | हमारे |
| अंशम् | पक्षम् | पक्ष को |
| उत् | उत्+ | – |
| अव | उत्+अव,उत्कृष्ट-तया रक्ष | खूब रक्षा करो |
| भरेऽभरे | संग्रामे संग्रामे | प्रत्येक युद्ध में |
| अस्मभ्यम् | अस्मभ्यम् | हमारे ताईं |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| वरिवः | धनम् (निघं०२।१०) | धन को |
| सुऽगम् | सुप्रापम् | सहज से प्राप्त होने वाले को |

| | | |
|---|---|---|
| कृधि | कुरु | करो |
| प्र | प्र + | — |
| शत्रूणाम् | शत्रूणाम् | शत्रुओं के |
| मघऽवन् | हे धनवन्! | हे धन वाले |
| वृष्ण्या | वीर्याणि [शेर्लोपः] | वीर्यों को |
| रुज | प्र+रुज, प्रकर्षेण भङ्धि | खूब तोड़ो |

संस्कृतार्थः ।

हे धनवन्निन्द्र! सहयोद्धा त्वया वयं धनं जयेम (त्वम्) सङ्ग्रामे सङ्ग्रामेऽस्माकं पक्षमुत्कृष्टतया रक्ष, अस्मभ्यं धनं सुप्रापं कुरु, शत्रूणां वीर्याणि (च) प्रकर्षेण भङ्धि ॥ ४ ॥

भाषार्थः ।

हे धनवान इन्द्र ! साथ लड़ने वाले आपके द्वारा हम धनको जीतें, आप प्रत्येक युद्ध में हमारे पक्ष की खूब रक्षा करें, धनको हमारे ताईं सहज से प्राप्त होने वाला करें (और) शत्रुओं के वीर्यों को खूब तोड़ें ॥ ४ ॥

इन्द्रो देवता जगतीछन्दः ॥१२।१२।१२।१२

नानाहित्वाहवमानाजनाइमे धनानांधर्तरवसाविपन्यवः। अस्माकंस्मारथमातिष्ठसातये जैत्रंहीन्द्र निभृतंमनस्तव ॥ ५ ॥

| | | |
|---|---|---|
| नाना | नाना (अव्ययम्) | अनेक |
| हि | खलु | सचमुच |
| त्वा | त्वाम् | तुझको |
| हवमानाः | आह्वयन्तः | बुलाते हुए |
| जनाः | मनुष्य समूहाः | मनुष्य समूह |
| इमे | इमे | ये |
| धनानाम् | धनानाम् | धनों के |

| | | |
|---|---|---|
| धर्तः | हे धारयितः ! | हे धारणकरने वाले |
| अवसा | रक्षार्थम् (चतुर्थ्यर्थे तृतीया) | रक्षा के लिये |
| विपन्यवः | स्तोतारः (पन् स्तुतौ) | स्तुति करने वाले |
| अस्माकम् | अस्माकम् | हमारे |
| स्म | एव (सा० भा०) | ही |
| रथम् | रथम् | रथ को |
| आ | आ + | – |
| तिष्ठ | आ + तिष्ठ, आरोह | चढ़ो |
| सातये | धनप्राप्तये | (धन की)प्राप्तिके लिये |
| जैत्रम् | जयशीलम् | जीतने वाला |
| हि | खलु | सचमुच |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |

| | | |
|---|---|---|
| १निऽभृतम् | निश्चलम् (आ०को०) | निश्चल |
| मनः | मनः | मन |
| तव | तव | तेरा |

संस्कृतार्थः ।

हे धनानां धारयितः! इन्द्र! रक्षार्थं स्तुतिकर्तार- इमे नाना मनुष्यसमूहास्त्वामाह्वयन्तः खलु (विद्य- न्ते परन्तु त्वम्)अस्माकमेव धनलाभाय रथमारोह तव निश्चलं मनो जयशीलं खलु (अस्ति) ॥ ५॥

भाषार्थः ।

हे धनों के धारण करने वाले इन्द्र ! रक्षा के लिये स्तुति करने वाले ये अनेक मनुष्य समूह आप को सचमुच बुलाते हैं (परन्तु) आप हमारे ही धन- लाभ के लिये रथ पर चढें,आपका निश्चल मन सच- मुच जय को प्राप्त करने वाला (है) ॥५॥

(१) निश्चल अर्थात् हमारी सहायता के लिये स्थिर ।

इन्द्रोदेवता जगतीछन्दः ।१२।१२।१२।१२॥

गोजिताबाहूअमितक्रतुःसिमः

कर्म॑न्कर्मञ्छ॒तमू॑तिः खज॒ङ्करः ।

अ॒क॒ल्प इन्द्रः॑ प्रति॒मान॒मोज॒सा ऽथा॒

जना॒ वि ह्व॑यन्ते सिषा॒सवः॑ ॥ ६ ॥

| | | |
|---|---|---|
| गो॒ऽजिता॑ | गवां जेतारौ (विभक्तेरात्वम्) | गौओं के जीतने वालीं |
| बा॒हू० | बाहू | दोनों भुजा |
| अमि॑तऽक्रतुः | अमितबलः | अमित बल वाला |
| सि॒मः | पूर्णः, त्रुटिरहित इत्यर्थः | त्रुटि से रहित |
| कर्म॑न्ऽकर्म॑न् | कर्मणि कर्मणि (उभयत्र सप्तम्यालुक्) | प्रत्येक कर्म में |
| श॒तम्ऽऊ॑तिः | शतरक्षोपेतः | सैकड़ों रक्षाओं से युक्त |

| | | |
|---|---|---|
| खजम्ऽकरः | क्षोभस्योत्पादकः (आ० को०) | क्षोभ के उत्पन्न करने वाला |
| अकल्पः | यन्त्रणारहितः ( „ ) | रोक टोक से रहित |
| इन्द्रः | इन्द्रः | इन्द्र |
| प्रतिऽमानम् | प्रतिमानम् | मूर्ति |
| ओजसा | बलस्य (षष्ठ्यर्थे तृतीया) | बल की |
| अथ | अतः (सा० भा०) | इसलिये |
| जनाः | मनुष्याः | मनुष्य |
| वि | वि + | – |
| ह्वयन्ते | वि+ह्वयन्ते, विशेषेणाऽऽह्वयन्ति | बहुत बुलाते हैं |
| सिसासवः | धनकामाः (षणसम्भक्तौ–सनिल· स्युः प्रत्ययः) | धन की कामना वाले |

संस्कृतार्थः ।

(इन्द्रस्य) बाहू गवांजेतारौ (स्तः) इन्द्रोऽमितबलः, त्रुटिरहितः, कर्म्मणि कर्म्मणि शतरक्षोपेतः, (जनेषु)

क्षोभस्योत्पादको यन्त्रणारहितो बलस्य प्रतिमानम् (चाऽस्ति) अतः (एनम्) धनकामा मनुष्या भृशमाह्वयन्ति ॥ ६ ॥

भाषार्थः ।

(इन्द्रकी) दोनों भुजा गौओं के जीतने वाली (हैं) इन्द्र अमित बलवाले, त्रुटि से रहित, प्रत्येक कर्म्म में सैकड़ों रक्षाओं से युक्त, रोक टोक से रहित (मनुष्यों में) क्षोभ के उत्पन्न करने वाले (और) बल की मूर्ति (हैं) इसलिये (इनको) धनकी कामना वाले मनुष्य खूब बुलाते हैं ॥ ६ ॥

इन्द्रोदेवता जगतीछन्दः ।१२।१२।१२।१२

उत्तंशतान्मघवन्नुच्चभूयस

उत्सहस्राद्रिरिचेकृष्टिषुश्रवः ।

अमात्रंत्वाधिषणातित्विषेमह्य धा

वृत्राणिजिघ्नसेपुरन्दर ॥ ७॥

| | | |
|---|---|---|
| उत् | ऊर्ध्वम् | ऊपर |
| ते | तव | तेरा |
| शतात् | शतात् | सौ से |
| मघऽवन् | हे धनवन् ! | हे धनवान् |
| उत् | ऊर्ध्वम् | ऊपर |
| च | च | और |
| भूयसः | बहुतरात् | इससे अधिक से |
| उत् | उत्+ | – |
| सहस्रात् | सहस्रात् | हजार से |
| रिरिचे | उत् + रिरिचे, अधिकमस्ति (लडर्थे कर्म्मणि लिट्) | अधिक है |
| कृष्टिषु | प्रजासु (निघं०२।३) | प्रजाओं में |

| | | |
|---|---|---|
| श्रवः | यशः | यश |
| अमात्रम् | मात्रया-इयत्तया रहितम् | माप से रहित को |
| त्वा | त्वाम् | तुझ को |
| धिषणा | वाणी (निघं०१।११) | वाणी |
| तित्विषे | दीपयति (अन्तर्भावितण्यर्थात्त्विषेर्लडर्थे लिट्) | प्रकाशित करती है |
| मही | महती | बड़ी |
| अध | अथ | अब |
| वृत्राणि | शत्रून् | शत्रुओं को |
| जिघ्नसे | जहि (हन्तेर्लेटि व्यत्ययेनाऽऽत्मनेपदम्,अडागमे सति शपः श्लुश्छान्दसः) | मार |
| पुरन्दर | हे पुराणांविदारयितः! | हे गढ़ों के तोड़ने वाले |

संस्कृतार्थः।

हे धनवन्! प्रजासु तव यशः शतादूर्ध्वं बहुतराच्चोर्ध्वं सहस्रात् (अपि) अधिकं वर्तते, हे पुराणां विदारयितः! इयत्तारहितं त्वां महती (वेद-) वाणी प्रकाशयति, इदानीम् (त्वम्) शत्रून् जहि॥ ७॥

भाषार्थः।

हे धन वाले! प्रजाओं में आपका यश सौ से ऊपर और (सौ से) अधिक से ऊपर (और) हजार से (भी) अधिक है, हे गढ़ों के तोड़ने वाले! न मापे जाने वाले आप को महती (वेद) वाणी प्रकाशित करती है, अब आप शत्रुओं को मारें॥ ७॥

इन्द्रोदेवता जगतीछन्दः १२।१२।१२।१२।

त्रिविष्टिधातुप्रतिमानमोजस

स्तिस्रोभूमीर्नृपतेत्रीणिरोचना। अ-

तीदंविश्वंभुवनंववक्षिथा ऽशत्रुरिन्द्र

जनुषासनादसि॥ ८॥

| | | |
|---|---|---|
| १ त्रिविष्टि-ऽधातु | त्रिधा विष्ट्या प्रवेशनेन विधीयतेक्रियत इति त्रिगुणितमित्यर्थः (सा०भा०) | तीन लड़ वाली |
| प्रतिऽमानम् | प्रतिमानम् | मूर्ति |
| ओजसः | बलस्य | बल की |
| तिस्रः | तिस्रः | तीन |
| भूमीः | भूमयः (पूर्वसवर्णदीर्घः) | पृथिवियाँ |
| नृऽपते | हे नृणांपते ! | हे मनुष्यों के स्वामी |
| त्रीणि | त्रीणि | तीन |
| रोचना | ज्योतींषि (शेर्लोपः) | ज्योतियाँ |
| अति | अतीत्य | बढ़ कर |
| इदम् | इदम् | इस को |

| | | |
|---|---|---|
| विश्वम् | सर्वम् | सम्पूर्ण को |
| भुवनम् | भूतजातम् (सा०भा०) | जीवों को |
| ववक्षिथ | महानभवः (निघं०३।३) | महान हुए हो |
| अशत्रुः | शत्रुरहितः | शत्रुओं से रहित |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| जनुषा | जन्मना | जन्म से |
| सनात् | सर्वकालात् | सदा से |
| असि | असि | तू है |

संस्कृतार्थः ।

हे नृणांपते ! इन्द्र ! तिस्रो भूमयस्त्रीणि ज्योतींषि (च तव) बलस्य त्रिगुणितं प्रतिमानम् (सन्ति, त्वम्) इदं सर्वं भूतजातमतीत्य महानभवः (त्वम्) सर्वदा जन्मना (एव) शत्रुरहितोऽसि ॥८॥

भाषार्थः।

हे मनुष्यों के स्वामी इन्द्र ! तीनों पृथिवियाँ (और) तीनों ज्योतियाँ(आपके)बलकी तीन लड़वाली मूर्ति हैं आप इन सम्पूर्ण जीवों से बढ़ कर महान हुए हैं आप सदा जन्मते (ही)शत्रु से रहित हैं ॥८॥

तीन पृथिवी—पृथिवी, अन्तरिक्ष का नाम भी है, तीसरी पृथिवी से यहां द्यौ अभिप्रेत है।

और तीन ज्योति—अग्नि, विद्युत और सूर्य ये तीन२ इन्द्र के बल की एक एक लड़ रूप हैं।

इन्द्रोदेवता जगतीछन्दः।१२।१२।१२।१२

त्वांदेवेषुप्रथमंहवामहे त्वंब-भूथपृतनासुसासहिः। सेमन्नःका-रुमुपमन्युमुद्भिद मिन्द्रःकृणोतुप्रस-वेरथंपुरः ॥ ९ ॥

| | | |
|---|---|---|
| त्वाम् | त्वाम् | तुझ को |
| देवेषु | देवेषु | देवताओं में |

| | | |
|---|---|---|
| प्रथमम् | मुख्यम् | मुखिया को |
| हवामहे | आह्वयामः | हम बुलाते हैं |
| त्वम् | त्वम् | आप |
| बभूथ | बभूविथ ('बभूथा-' इति निपातनादिडभावः) | हुए हो |
| पृतनासु | संग्रामेषु (निघं० २। १७) | युद्धों में |
| ससहिः | विजयी | विजय करनेवाला |
| सः | सः | वह |
| इमम् | इमम् | इस को |
| नः | अस्माकम् | हमारे |
| कारुम् | स्तोतारम् (निघं० ) | स्तोता को |
| उपऽमन्युम् | बुद्धिमन्तम् (आ० को०) | बुद्धिमान को |

| | | |
|---|---|---|
| उत्ऽभिदम् | उद्भेदो विकासस्तेनयुक्तं कल्पनाचतुरमित्यर्थः | कल्पना में चतुर को |
| इन्द्रः | इन्द्रः | इन्द्र |
| कृणोतु | करोतु | करे |
| प्रऽसवे | उत्पत्तौ | उत्पत्ति में |
| रथम् | रथम् | रथ को |
| पुरः | अग्रवर्तिनम् | आगे बढ़े हुए को |

संस्कृतार्थः।

(हे इन्द्र!) देवेषु मुख्यं त्वाम् (वयम्) आह्वयामः, त्वं सङ्ग्रामेषु विजयी बभूविथ, सइन्द्रोऽस्माकमिमं स्तोतारं बुद्धिमन्तं कल्पनाचतुरम् (च) करोतु (युद्धस्य) उत्पत्तौ (चाऽस्मद्) रथमग्रवर्तिनम् (करोतु) ॥ ९ ॥

भावार्थ।

(हे इन्द्र!) देवताओं में मुखिया आपको हम बुलाते हैं आप युद्धों में जीतने वाले रहे हो, वह इन्द्र हमारे इस स्तोता को बुद्धिमान (और) कल्पना में

चतुर बनावें (और युद्धके आरंभ) होने पर (हमारे) रथको सब से आगे करें ॥ ९ ॥

इन्द्रोदेवता जगतीछन्दः ।१२।१२।१२।१२।

त्वंजिगेथनधनारुरोधिथा ऽर्भे-
ष्वाजामघवन्महत्सुच । त्वामुग्र-
मवसेसंशिशीमस्य थानइन्द्रहवनेषु
चोदय ॥ १० ॥

| | | |
|---|---|---|
| त्वम् | त्वम् | तू ने |
| जिगेथ | जयंप्राप्तवानसि | जय को प्राप्त किया है |
| न | न | नहीं |
| धना | धनानि (शेर्लोपः) | धनों को |
| रुरोधिथ | अवरुद्धवानसि | तू ने रोका है |
| अर्भेषु | अल्पेषु | छोटों में |

| | | |
|---|---|---|
| आजा | सङ्ग्रामेषु (सुपामितिविभक्तेर्डादेशः) | युद्धों में |
| मघऽवन् | हे धनवन् ! | हे धन वाले |
| महत्ऽसु | महत्सु | बड़ों में |
| च | च | और |
| त्वाम् | त्वाम् | तुझ को |
| उग्रम् | भीमम् | भयानक को |
| अवसे | रक्षणाय | रक्षा के लिये |
| सम् | सम्+ | – |
| शिशीमसि | सम्+शिशीमसि, सम्यक् तीक्ष्णीकुर्मः, उत्तेजयाम इत्यर्थः (शोतनूकरणे शपःश्लुश्छान्दसः, मस इकारागमः) | हम भली प्रक उत्तेजित करते |

| | | |
|---|---|---|
| अथ | इदानीम् | अब |
| नः | अस्मान् | हम को |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| हवनेषु | आह्वानेषु | बुलावों में |
| चोदय | प्रेरय | प्रेरण करो |

संस्कृतार्थः।

हे धनवन्निन्द्र ! त्वमल्पेषु महत्सु च संग्रामेषु जयं प्राप्तवानसि धनानि(च) न रुद्धवानसि (वयम्) भीमं त्वां सम्यगुत्तेजयामः (त्वम्) इदानीम् (युद्धस्य) आह्वानेष्वस्मान् प्रेरय ॥१०॥

भाषार्थः।

हे धनवाले इन्द्र! आपने छोटे और बडे युद्धों में जय को प्राप्त किया है (और) धनों को नहीं रोका है हम भयानक आपको भली प्रकार उत्तेजित करते हैं, आप (युद्धके) बुलावों में हमको प्रेरण करें ॥ १० ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः।११।११।११।११

विश्वाहेन्द्रो अधिवक्ता नो अस्त्व

परिह्वृताःसनुयामवाजम् । तन्नो

मित्रोवरुणोमामहन्ता मदितिः

सिन्धुःपृथिवीउतद्यौः ॥११॥

| | | |
|---|---|---|
| विश्ववाहा | सर्वेषु दिनेषु (अत्यन्तसंयोगेद्धितीया, शेर्लोपः) | सब दिनों में |
| इन्द्रः | इन्द्रः | इन्द्र |
| अधिऽवक्ता | पक्षावलम्बी | पक्षपाती |
| नः | अस्माकम् | हमारा |
| अस्तु | अस्तु | हो |
| अपरिऽह्वृताः | अकुटिलगतयः | टेढ़ीगति से र |
| सनुयाम | सम्भजेम | हम सेवन क |

| | | |
|---|---|---|
| वाजम् | अन्नम् | अन्न को |
| तत् | एतत् (एकारलोपश्छान्दसः) | इस को |
| नः | अस्माकम् | हमारी |
| मित्रः | मित्रः | मित्र |
| वरुणः | वरुणः | वरुण |
| ममहन्ताम् | आद्रियन्ताम् | आदर करें |
| अदितिः | अदितिः | अदिति |
| सिन्धुः | सिन्धुः | समुद्र |
| पृथिवी | पृथिवी | पृथिवी |
| उत | च | और |
| द्यौः | द्यौः | द्यौ |

संस्कृतार्थः।

इन्द्रः सदाऽस्मत्पक्षावलम्बो भवतु(वयम्)अकु-

टिल गतयः (सन्तः) अन्नं सम्भजेम, एतदस्माकम् (अभ्यर्थनम् ) मित्रो वरुणोऽदितिः सिन्धुः पृथिवी द्यौश्चाऽऽद्रियन्ताम् ॥ ११ ॥

भाषार्थः ।

इन्द्र सदा हमारे पक्षपाती हों, कुटिल गतिसे रहित हुए २ हम अन्न को सेवन करें, इस हमारी (प्रार्थना) को मित्र, वरुण, अदिति, समुद्र, पृथिवी और द्यौ आदर करें ॥ ११ ॥

इन्द्र हमारे पक्षपाती तभी होसकते हैं जब हम कुटिलता का परित्याग करें ॥

इति द्व्यधिकशततमं सूक्तम् ।

# ऋ० मं०१ सू०१०३।

## इन्द्रोदेवता कुत्सऋषिः।

### विनियोगः-

१-८। एतत्सूक्तं तृतीयेछन्दोमे निष्केवल्ये निविद्धानम्।
(आ०८।७।२४)

### सूक्तस्य भावार्थः।

इन्द्रस्य सूर्य्यरूपमुत्कृष्टं बलं दिवि वर्तते, इदमग्निरूपं बलं च पृथिव्यां वर्तते यत्पूर्वस्मिन् काल ऋषयो यजनार्थं स्थापितवन्तः, एतदुभयं बलं यजमानस्य सामर्थ्यं वर्धयतः, यथा संग्रामे ध्वजाः संयुज्यराज्ञो बलं वर्धयन्ति १ इन्द्रः पृथिवीं धृतवान् विस्तृतां च कृतवान् स वज्रेण वृत्रं हत्वा जलानि विसृष्टवान् सोऽहिं रौहिणं व्यंसमित्येतान् देवमनुष्यशत्रूँश्च विनाशितवान् २ यथेन्द्रः पूर्वकाल-आर्य्यशत्रूणां पुराणि विदारयन् सञ्चरत् तथेदानीमप्यार्य्याणां बलं यशश्च वर्धयित्वा तेषां शत्रून् विनाशयेत् ३ यद्यपीन्द्रस्य "मघवा" इति प्रसिद्धं नामाऽति प्राचीनमस्ति तथापि स स्वकीया-र्य्योपासकानां समीपं शत्रुहननाय प्राप्नुवन् सूनुरिति नाम धारितवानस्ति (ऋ० १।६२।९ ऋच्यपि यजमानस्य पुत्र-सम्बन्धत्वेनेन्द्रस्य सूनुर्नामाऽवगन्तव्यम्)॥ ४॥ आर्य्यैरिन्द्रस्य प्रभूतमैश्वर्य्यं दृष्ट्वा तस्य बलं श्रद्धातव्यं सएवाऽऽर्य्यजात्यै दस्युभ्यो गवाश्वौषधवनानि सरित् सरोवर रूपाणि जलानि च लब्धवानस्ति ५ स सत्यबलः श्रेष्ठश्चेन्द्रःसोमेन पूजयितव्यः,यतः स यागरहितस्य धनमपहृत्य यज्वसु विभजति ६ इन्द्रस्य तद्वीरकर्म प्रकृष्टतर-मस्ति यतः स्वपन् वृत्रो गर्जनरूपेण वज्रप्रहारेण जागरितः, यं गर्जनं श्रुत्वा सपत्नीका मयूरादयः पक्षिणो नृत्यन्तिसर्वेदेवाश्च

मुदिता भवन्ति ७ यदाऽनावृष्टेरभिमानिनःशुष्णादयोऽसुरा इन्द्रेण नाशितास्तदाऽस्माकं प्रार्थना सफलाऽभवत्, तदस्माकमभ्यर्थनं मित्रादयोदेवा आद्रियन्ताम् ॥ ८ ॥

इन्द्रोदेवता त्रिष्टुपछन्दः।१ १।१ १।१ १।१ १

तत्तइन्द्रियंपरमंपराचैरधारयन्त

कवयःपुरेदम्। क्षमेदमन्यद्दिव्य१

न्यदस्य समीपृच्यतेसमनेवकेतुः।१।

| | | |
|---|---|---|
| तत् | प्रसिद्धम् | प्रसिद्ध |
| ते | तव | तेरा |
| इन्द्रियम् | बलम् | बल |
| परमम् | उत्कृष्टम् | उत्तम |
| पराचैः | दूरम् (निघं० ३।२६) | दूर |
| अधारयन्त | स्थापितवन्तः | स्थापन किया है |

| | | |
|---|---|---|
| कवयः | ऋषयः | ऋषियों ने |
| पुरा | पूर्वकाले | पूर्व काल में |
| इदम् | इदम् | इस को |
| क्षमा | क्षमायाम् (सुपामितिसप्तम्यालुक्) | पृथिवी में |
| इदम् | इदम् | यह |
| अन्यत् | एकम् | एक |
| दिवि | दिवि | द्यौ में |
| अन्यत् | अन्यत् | दूसरा |
| अस्य | अस्य | इस का |
| सम् | सम् + | – |
| ईम्० | (पूरणः) | –– |

| | | |
|---|---|---|
| पृच्यते | सम्+पृच्यते संयुज्यते | मिलता है |
| समनाऽइव | संग्रामे-इव (समनमिति संग्राम नाम निघं० २।१७ सुपामिति सप्तम्याआत्वम्) | युद्ध में जैसे |
| केतुः | ध्वजः | ध्वजा |

संस्कृतार्थः।

(हे इन्द्र !) तव प्रसिद्धम् (सूर्यरूपम्) उत्कृष्टं बलं दूरम् (विद्यते) इदम् ( अग्निरूपं बलं च ) ऋषयः पूर्वकाले [गार्हपत्यादि रूपेण] स्थापितवन्तः, अस्य ( इन्द्रस्य ) इदमेकम् ( बलम् ) पृथिव्या-मन्यत् (च) दिवि (वर्तते) ( उभयं च) संग्रामे ध्वज इव संयुज्यते ॥ १ ॥

भाषार्थः।

(हे इन्द्र !) आपका प्रसिद्ध (सूर्यरूप) उत्तमबल दूर (रहता है) (और)इस (अग्निरूप बल) को ऋषियों ने पूर्वकाल में(गार्हपत्यआदि रूप से)धारण किया है, इस (इन्द्र ) का यह एक (बल) पृथिवी में (और) दूसरा आकाश में (है,और) दोनों संग्राम में ध्वजा की न्याईं मिलते हैं ॥१॥

जिस प्रकार संग्राम में कई ध्वजाएं मिलकर राजाके बल को बढ़ाती हैं, इसी प्रकार अग्नि के यजन करने वाले को इन्द्रका सूर्य्य रूपी बल भी इन्द्र की प्राप्तिमें सहायक होता है।

इन्द्रोदेवता त्रिष्टुप्छन्दः ।१।१।१।१।१।१।१

सधारयत्पृथिवींपप्रथच्च वज्रेण हत्वानिरपःससर्ज । अहन्नहिमभिनद्रौहिणं व्य हन्व्यंसंमघवा शचीभिः । २ ।

| | | |
|---|---|---|
| सः | सः | उसने |
| धारयत् | धृतवान् (अडभावः) | धारण किया है |
| पृथिवीम् | पृथिवीम् | पृथिवी को |
| पप्रथत् | विस्तारितवान् (पृथुविस्तारे-ण्यन्ताद-स्माल्लुङ्यडभावः) | फैलाया है |

| | | |
|---|---|---|
| च | च | और |
| वज्रेण | वज्रेण | वज्र से |
| हत्वा | हत्वा | मार कर |
| निः | निः+ | – |
| अपः | अपः | जलों को |
| ससर्ज | निः+ससर्ज, अधः पातितवान् | नीचे गिराया है |
| अहन् | हतवान् | मारा है |
| अहिम् | अहिम् | अहि को |
| अभिनत् | वि+अभिनत, विदारितवान् | चीर डाला है |
| रौहिणम् | रौहिणम् | रौहिण को |
| वि | वि+ | |

| | | |
|---|---|---|
| अहन् | नाशितवान् | नाश किया है |
| विऽस्रंसम् | व्यंसम् | व्यंस को |
| मघऽवा | धनवान् | धनवान ने |
| शचीभिः | बलैः | बलों से |

संस्कृतार्थः ।

स धनवान् (इन्द्रः) पृथिवीं धृतवान् विस्तीर्णां च कृतवान्, वज्रेण (वृत्रम) हत्वाऽपोऽधःपातितवान् (सः) बलैरहिं हतवान् रौहिणं विदारितवान् व्यंसम् (च) नाशितवान् ॥ २ ॥

भाषार्थः ।

उस धनवान् (इन्द्र) ने पृथिवी को धारण किया है और फैलाया है, वज्र से (वृत्र को) मार कर जलों को नीचे गिराया है (उस ने) बलों से अहि को मारा है रौहिण को चीर डाला है ( और ) व्यंस को नाश किया है ॥ २ ॥

"अहि, रौहिण और व्यंस" देव और मनुष्य शत्रुओं के कल्पित नाम हैं ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।११।११।११।११

सजातूभर्म्मा श्रद्दधान ओजः पुरोविभिन्दन्नचरद्विदासीः। विद्वान्वज्रिन्दस्यवे हेतिमस्याऽऽर्यं सहोवर्धया द्युम्नमिन्द्र ।३।

| | | |
|---|---|---|
| सः | सः | वह |
| जातूऽभर्म्मा | वज्रस्यधर्ता (जातूरितिवज्रनाम आ०को०भृञ्धारणे मनिन् प्रत्ययः) | वज्रकोधारण करने वाला |
| श्रत्ऽदधानः | श्रद्दधानः | श्रद्धा करता हुआ |
| ओजः | बलम् | बल को |
| पुरः | पुराणि | गढ़ों को |

| | | |
|---|---|---|
| विऽभिन्दन् | विदारयन् | तोड़ताहुआ |
| अचरत् | वि + अचरत् | बिचरा है |
| वि | वि + | — |
| दासीः | दस्युसम्बन्धीनि | दस्युसंबंधियें को |
| विद्वान् | जानन् | जानता हुआ |
| वज्रिन् | हे वज्रिन् ! | हे वज्रधारी |
| दस्यवे | दस्यवे | दस्यु के ताईं |
| हेतिम् | वज्रम् (निघं २।२०) | वज्र को |
| अस्य | प्रक्षिप | फेंको |
| आर्य्यम् | आर्य्यसम्बन्धि | आर्य्य संबंधी को |
| सहः | बलम् | बल को |
| वर्धय | वर्धय | बढ़ाओ |

| | | |
|---|---|---|
| द्युम्नम् | यशः | यश को। |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |

संस्कृतार्थः ।

वज्रस्य धर्ता सः (इन्द्रोनिज-) बलं श्रद्दधानः सन् दस्युसम्बन्धीनि पुराणि विदारयन् विचरितवान्, हे वज्रिन्निन्द्र!(आर्यं दस्युंच)जानन् (त्वम्) दस्यवे वज्रं प्रक्षिप, आर्य्यसम्बन्धि बलं यशः (च) वर्धय ३

भाषार्थः ।

वज्रके धारण करनेवाले वह (इन्द्र अपने) बलमें श्रद्धा रखतेहुए दस्युओं के गढों को तोड़ते हुए विचरे हैं, हे वज्रधारी इन्द्र ! ( आर्य्य और दस्यु को ) जानते हुए आप दस्यु पर वज्र को फैंकें (और) आर्यों के बल (और) यश को बढावें। ३।

इन्द्रोदेवता त्रिष्टुप्छन्दः।११।११।११।११

तदूचुषेमानुषेमायुगानि कीर्तेन्यं मघवानामबिभ्रत्। उपप्रयन्दस्यु-

हत्यायवज्री यद्दस्नुःश्रवसेना-
मदधे ॥ ४ ॥

| | | |
|---|---|---|
| तत् | प्रसिद्धम् | प्रसिद्ध को |
| ऊचुषे | स्तुतवते ( सा०भा० ) | स्तोताके लिये |
| मानुषा | मनुष्यसम्बन्धीनि (शेर्लोपः'कालाध्वनोः–' इति द्वितीया) | मनुष्यसंबंधियोंमें |
| इमा | इमानि ( ,, ) | इन में |
| युगानि | युगानि | युगोंमें |
| कीर्तेन्यम् | कीर्तनीयम् (केन्य प्रत्ययः) | स्तुतिके योग्य को |
| मघवा | मघवा | मघवा |
| नाम | नाम | नाम को |

| | | |
|---|---|---|
| बिभ्रत् | धारयन् | धारण करता हुआ |
| उपऽप्रयन् | समीपंप्राप्नुवन् | पासजाताहुआ |
| दस्युऽहत्याय | दस्यूनां हत्यायै (लिङ्गव्यत्ययः) | दस्युओं के मारने के लिये |
| वज्री | वज्रधारी | वज्रधारी ने |
| यत् | यत् | जो |
| ह | खलु | सचमुच |
| सूनुः[2] | सुनुः | पुत्र |
| श्रवसे[3] | यशसे | यशके लिये |
| नाम | नाम | नाम को |
| दधे | धारितवान् | धारण किया है |

संस्कृतार्थः ।

इमानि मानुषयुगानि कीर्तनीयं प्रसिद्धम् 'मघव

(इति) नाम धारयन् वज्री (इन्द्रः) स्त्रोत्रे दस्यूनां हननाय प्राप्नुवन् सन् यशसे यत् खलु 'सूनुः' इति नाम धारितवान् । ४ ।

इन मानुषयुगों में कीर्तन के योग्य मघवा (इस) प्रसिद्ध नामको धारण करते हुए वज्रधारी (इन्द्र)ने स्तोता के निमित्त दस्युओं के मारनेके लिये प्राप्त होते हुए यश के निमित्त सचमुच पुत्र नाम को धारण किया है ॥४॥

(१) अथर्ववेद (८।२।२१) से युग का परिमाण १० वा १२ हजार वर्ष प्रतीत होता है, और मनुस्मृति में भी युग का परिमाण १२००० वर्ष ही लिखा है, परन्तु यह देवयुग है, मानुष युग से मनुष्य की पीढ़ी अभिप्रेत है। "मानुषमायुगानि" का अर्थ बोल चाल की भाषा में "इन सैकड़ों पीढ़ियों में" ऐसा होगा।

(२) यद्यपि इन्द्र का प्रसिद्ध नाम "मघवा" है परन्तु अप्रसिद्ध नामों में एक "सूनु" भी है, देखो ऋ० १।६२।९ जिस की व्याख्या में (देखो पृ० १८५०) यह अनुमान किया गया था कि द्यावापृथिवी का पुत्र होने से इन्द्र का नाम "सूनु" है परन्तु इस मंत्र से प्रतीत होता है कि जिस तरह अग्नि यजमान का पुत्र है इसी प्रकार इन्द्र भी उपासक के पुत्र हैं, और इसलिये उन का नाम "सूनु" है।



इन्द्रोदेवता त्रिष्टुप्छन्दः ।११।११।११।११

तदस्येदंपश्यताभूरिपुष्टं श्र-

दिन्द्रस्यधत्तनवीर्य्याय। सगाअवि-

न्दत्सोअविन्ददश्वा न्त्सओषधीः

सोअपः सवनानि ॥ ५ ॥

| | | |
|---|---|---|
| तत् | प्रसिद्धम् | प्रसिद्ध को |
| अस्य | अस्य | इस के |
| इदम् | इदम् | इस को |
| पश्यत | पश्यत | देखो |
| भूरि | प्रभूतम् | बहुत को |
| पुष्टम् | पुष्टम् | पुष्ट को |
| अत् | अत+ | – |
| इन्द्रस्य | इन्द्रस्य | इन्द्र के |

| | | |
|---|---|---|
| धत्तन | श्रत्+धत्तन,श्रद् धारयत (तस्यतनादेशः) | श्रद्धा करो |
| वीर्य्याय | वीर्य्याय | बल के लिये |
| सः | सः | उस ने |
| गाः | गाः | गौओं को |
| अविन्दत् | लब्धवान् | प्राप्त किया है |
| सः | सः | उस ने |
| अविन्दत् | लब्धवान् | प्राप्त किया है |
| अश्वान् | अश्वान् | घोड़ों को |
| सः | सः | उस ने |
| ओषधीः | ओषधीः | ओषधियों को |
| सः | सः | उस ने |
| अपः | अपः | जलों को |

| | | |
|---|---|---|
| **सः** | सः | उस ने |
| **वनानि** | वनानि | बनों को |

संस्कृतार्थः ।

(हे आर्य्याः ! यूयम्) अस्येन्द्रस्येदं प्रसिद्धं प्रभूतं पुष्टम् (वीर्य्यम्) पश्यत (दृष्ट्वा चाऽस्य) वीर्य्याय श्रद्धारयत, सः (इन्द्र आर्य्यजात्यै दस्युभ्यः)गा लब्धवान् सोऽश्वाँल्लब्धवान् स ओषधीर्जलानि स वनानि (च लब्धवान्) ॥ ५ ॥

भाषार्थः ।

(हे आर्य्य लोगो ! )तुम इस इन्द्र के इस प्रसिद्ध बहुत पुष्ट (वीर्य्य) को देखो (और इसके) बल में श्रद्धा करो, उस (इन्द्र) ने (आर्य्य जाति के लिये दस्युओं से) गौओं को प्राप्त किया है उस ने घोड़ों को प्राप्त किया है उसने ओषधियों को उसने जलों को (और) उसने बनों को (प्राप्त किया है ) ॥ ५ ॥

इन्द्रोदेवता त्रिष्टुपछन्दः ।११।११।११।११

भूरिकर्म्मणेवृषभायवृष्णे सत्य-

शुष्मायसुनवामसोमम्। यआहत्या परिपन्थीवशूरोऽयज्वनोविभजन्नेतिवेदः ॥ ६ ॥

| | | |
|---|---|---|
| भूरिऽकर्म्मणे | प्रभूतैः कर्म्मभिर्युक्ताय | बहुत कर्म्मों से युक्त के लिये |
| वृषभाय | श्रेष्ठाय | श्रेष्ठ के लिये |
| वृष्णे | वीर्य्यवते | वीर्य्यवानके लिये |
| सत्यऽशुष्माय | सत्यबलाय | सच्चेबलीके लिये |
| सनवाम | निष्पीडयाम (षुञ अभिषवे) | हम निचोड़ें |
| सोमम् | सोमम् | सोम को |
| यः | यः | जो |

| | | |
|---|---|---|
| आऽहत्य | लुभित्वा (आ० को०) | लालच करके |
| परिपन्थी ऽइव | चौरइव | चोर की न्याईं |
| शूरः | शूरः | शूरबीर |
| अयज्वनः | यजनरहितस्य | पूजा न करने वाले के |
| विऽभजन् | विभजन् | बांटता हुआ |
| एति | गच्छति | जाता है |
| वेदः | धनम (निघं०३।१६) | धन को |

संस्कृतार्थः ।

(वयम्) प्रभूतैःकर्मभिर्युक्ताय श्रेष्ठाय वीर्यवते सत्यबलाय(चेन्द्राय) सोमं निष्पीडयाम,यः शूरश्चौर इव लुभित्वा यजनराहतस्य धनम् (यज्वसु ) विभजन् ( सन् ) गच्छति ॥ ६ ॥

भाषार्थः।

हम बहुत कर्म्मोंसे युक्त, श्रेष्ठ, वीर्य्यवान्, (और) सच्चे बली (इन्द्र) के लिये सोम को निचोड़ें, जो शूरवीर चोर की न्याईं लालच करके पूजा न करने वाले के धन को (पूजा करने वालों में) बांटते हुए चलते हैं ॥ ६ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः।११।११।११।११

तदिन्द्रप्रेववीर्य्यंचकर्थ यत्स-
सन्तंवज्रेणाबोधयोऽहिम्। अनुत्वा
पत्नीर्हृषितंवयश्च विश्वेदेवासो
अमदन्ननुत्वा ॥ ७ ॥

| | | |
|---|---|---|
| तत् | तत् | उस को |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| प्रऽइव | प्रकृष्टमिव | प्रकृष्ट की न्याईं |

| | | |
|---|---|---|
| वीर्यम् | वीरकर्म्म (कर्मणियत्) | वीरकर्म को |
| चकर्थ | कृतवानसि | तूने किया है |
| यत् | यत् | जो |
| ससन्तम् | स्वपन्तम् (षसस्वप्ने) | सोते हुए को |
| वज्रेण | वज्रेण | वज्रके द्वारा |
| अबोधयः | जागरितवानसि | तूने जगाया है |
| अहिम् | वृत्रम् | वृत्र को |
| त्वा | त्वाम् | तुझ को |
| १ पत्नीः | पत्न्यः (पूर्वसवर्णदीर्घः) | पत्नियाँ |
| हृषितम् | हृषितम् | हर्षित हुए को |
| १ वयः | पक्षिणः | पक्षी |
| च | च | और |

| | | |
|---|---|---|
| विश्वे | सर्वे | सब |
| देवासः | देवाः (जसोऽसुगागमः) | देवता |
| अमदन् | मदयुक्ताअभवन् | मद से युक्त हुए हैं |
| अनु | अनु | पीछे |
| त्वा | त्वाम् | तुझ को |

संस्कृतार्थः ।

हे इन्द्र ! (त्वम्) तत् प्रकृष्टमिव वीरकर्म्म कृतवानसि यत् स्वपन्तं वृत्रं वज्रेण जागरितवानसि, हृषितं त्वामनुसृत्य पक्षिणः, ( तेषाम् ) पत्न्यः, सर्वे देवाश्च मदयुक्ता अभवन् ॥ ७ ॥

भाषार्थः ।

हे इन्द्र ! आपने यह बड़ासा वीरता का काम किया है जो सोते हुए वृत्र को वज्र द्वारा जगाया है, हर्षित हुए २ आपके पीछे पक्षी (उनकी) पत्नियां और सब देवता मद से युक्त हुए हैं ॥ ७ ॥

(१)सावन भादोंमें जब बिजली की गरज होती है तब मोर आदि पक्षी पत्नियों सहित नाचते देखे जाते हैं ।

इन्द्रोदेवता त्रिष्टुप्छन्दः।१११११११११।

शुष्णांपिप्रुंकुयवंवृत्रमिन्द्र यदा-
वधीर्विपुरःशम्बरस्य । तन्नोमित्रो
वरुणोमामहन्ता मदितिःसिन्धुः
पृथिवीउतद्यौः ॥ ८ ॥

| | | |
|---|---|---|
| शुष्णम् | शुष्णम् | शुष्ण को |
| पिप्रुम् | पिप्रुम् | पिप्रु को |
| कुयवम् | कुयवम् | कुयव को |
| वृत्रम् | वृत्रम् | वृत्र को |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| यदा | यदा | जब |

| | | |
|---|---|---|
| अवधीः | वि+अवधीः विनाशितवानसि | तूने नाश किया है |
| वि | +वि | – |
| पुरः | पुराणि | गढ़ों को |
| शम्बरस्य | शम्बरस्य | शंबर के |
| तत् | तत् | उस को |
| नः | अस्माकम् | हमारी |
| मित्रः | मित्रः | मित्र |
| वरुणः | वरुणः | वरुण |
| ममहन्ताम् | आद्रियन्ताम् | आदर करें |
| अदितिः | अदितिः | अदिति |
| सिन्धुः | सिन्धुः | समुद्र |
| पृथिवी | पृथिवी | पृथिवी |

| | | |
|---|---|---|
| उ॒त | च | और |
| द्यौः | द्यौः | द्यौ |

संस्कृतार्थः।

हे इन्द्र !यदा (त्वम् )शुष्णं पिप्रुं कुयवं वृत्रं शम्ब-रस्य पुराणि(च) विनाशितवानसि (तदास्माकं प्रार्थना सफलाऽभवत्) तदस्माकम् (अभ्यर्थनम्) मित्रोवरुणो-ऽदितिः सिन्धुःपृथिवी द्यौश्चाऽऽद्रियन्ताम् ॥ ८ ॥

भाषार्थः।

हे इन्द्र! जब आपने शुष्ण को पिप्रु को कुयव को वृत्र को (और) शम्बर के गढ़ों को नाश किया (तब हमारी प्रार्थना सफल हुई)उस हमारी (प्रार्थना) को मित्र, वरुण, अदिति, समुद्र, पृथिवी और द्यौ आदर करें ॥ ८ ॥

शुष्ण, पिप्रु, कुयव, शम्बर ये सब अनावृष्टि रूप असुर के कल्पित नाम हैं ॥

इति त्र्यधिकशततमं सूक्तम्।

# ऋ० मं०१ सू० १०४

## इन्द्रोदेवता कुत्सऋषिः ।

## विनियोगो लैङ्गिकः ।

## सूक्तस्य भावार्थः ।

येऽश्वा रात्रौ दिनेवाऽस्मत्समीपमिन्द्रं प्रापयन्ति तान् विमुच्य सोऽस्मद्विहिते सदने हेषमाणोऽश्वइवोपविशतु ।१। आर्य्यमनुष्या दस्योर्भयादिइन्द्रस्य शरणं गतवन्तः, स त्वरया तेषां समीपं प्राप्य तान् समाश्वासयेत्, देवा आर्य्यशत्रोः, क्रोधं विनाशयित्वाऽऽर्य्यान् शुभगतये प्रेरयन्तु ।२। आर्य्यस्य स्वरूप मात्रमेव धनमस्ति तस्य शत्रोर्गृहेतु जलस्य स्थाने क्षीरं सेव्यते, एतादृशस्यद-स्योर्भार्य्ये नद्यां निमज्जनेन म्रियेताम् ।३। इन्द्रः स्वोपास-कसम्बन्धं त्यक्त्वाऽऽर्य्यशत्रोः देशे रमते, अतएव पूर्ववर्तिन्यो-ऽञ्जस्याद्या नद्यः शत्रुदेशं क्षीररूपेण जलेन समर्धयन्ति।४ इन्द्रो दस्युकृतादाक्रमादस्मानार्य्यान्रक्षेत्, यथा परस्त्रीकामो निजधनं परित्यजति तथाऽस्मान्नपरित्यजेत् ।५। इन्द्रोऽस्मभ्यं विपुलं प्रकाशं पुष्कलं वारि पापराहित्यं श्लाघ्यत्वं च ददातु,स गर्भावस्थायां वर्त-मानान्यस्मदपत्यानि न विनाशयतु, वयमस्य महते वीर्य्याय श्रद्दध्मः ।६।इदानीमहं प्राप्तबोधोऽस्मि,इन्द्रस्य बलाय श्रद्दधामि, अतः सोऽ-स्मान् महते धनाय प्रेरयतु,अस्मद्गृहं च कदाप्यन्नपानादिरिक्तं न भवेत्।७। इन्द्रोऽस्मान्नहन्यान्नपरित्यजेत,अस्माकं प्रियाणि भोग्यानि माऽपहरेत्, अस्माकं गर्भरूपाण्यपत्यानि गर्भिणीः स्त्रियश्च न वि-नाशयेद् यतो वयं क्षीयमाणाः सन्तः दस्युनिघ्ना न भवेम।८। इन्द्रोऽस्मदभिमुखमागच्छतु, सोमकामःसोऽस्माभिरभिषुतं सोमं पीत्वा मदयुक्तो भवतु, अस्माभिराहूतश्च सन् पितेवाऽस्मद् वचांसि शृणोतु ॥ ९ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।१११११११११

योनिष्टइन्द्रनिषदेअकारि त-

मानिषीदस्वानोनाऽर्वा । विमुच्या

वयोऽवसायाऽश्वान् दोषावस्तोर्व-

हीयसःप्रपित्वे ।१।

| | | |
|---|---|---|
| योनिः | स्थानम | स्थान |
| ते | तव | तेरे |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| निऽसदे | निषदनाय (भावेक्विप्) | बैठने के लिये |
| अकारि | अकारि | बनाया है |
| तम् | तम् | उस को |

| | | |
|---|---|---|
| आ | आ+ | – |
| नि | नि + | – |
| सीद | आ+नि + सीद, उपविश | बैठो |
| स्वानः | हेषमाणः (कर्त्तरिघञ्) | हिनहिनाता हुआ |
| न | इव | की न्याईं |
| अर्वा | अश्वः | घोड़ा |
| विऽमुच्य | विश्लिष्य | खोल कर |
| वयः | उत्पतनशीलान् (द्वितीयार्थे प्रथमा) | उड़ने वालों को |
| अवऽसाय | त्यक्त्वा | छोड़ कर |
| अश्वान् | अश्वान् | घोड़ों को |
| दोषा | रात्रौ | रात्रि में |
| वस्तोः | दिवसे (निघं० २।९) | दिन में |

| | | |
|---|---|---|
| वह्नीयसः | सत्वरं वोढॄन् | शीघ्र ले चलने वालों को |
| प्रऽपित्वे | समीपे (निघं० ३।२९) | निकट |

संस्कृतार्थः ।

हे इन्द्र ! (अस्माभिः) तव निषदनाय स्थानमकारि ( त्वम् ) उत्पतनशीलान् (अश्वान् रथाद्) विश्लिष्य रात्रौ दिवसे (चाऽस्माकम्) समीपे सत्वरं वोढॄन् (तान्) अश्वान् त्यक्त्वा हेषमाणोऽश्वइवोपविश ॥ १ ॥

भाषार्थः ।

हे इन्द्र ! (हम ने) आपके बैठने के लिये स्थान बनाया है आप उड़ने वाले (घोड़ों) को (रथ से) खोल कर रात (और) दिन (हमारे) समीप शीघ्र पहुंचाने वाले (उन) घोड़ों को छोड़कर हिनहिनातेहुए घोड़े की न्याईं बैठें ॥ १ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः।११।११।११।११।

ओत्येनरइन्द्रमूतयेगु नूचित्ता-

न्त्सद्योअध्वनोजगम्यात् । देवासो-

मन्युं दासस्यश्चम्नन् तेनआवक्ष-
न्त्सुवितायवर्णम् । २ ।

| | | |
|---|---|---|
| ओ० | आ + (उ-इतिपदपूरणः) | -- |
| त्ये | ते | वे |
| नरः | मनुष्याः | मनुष्य |
| इन्द्रम् | इन्द्रम् | इन्द्र को |
| ऊतये | रक्षार्थम् | रक्षा के लिये |
| गः | आ+गुः,आगत-वन्तः (अडभावः) | आए हैं |
| नु | क्षिप्रम् | शीघ्र |
| चित् | एव | ही |
| तान् | तान् | उन को |

| | | |
|---|---|---|
| सद्यः | इदानीम् (आ०को०) | अब |
| अध्वनः | मार्गेषु (सप्तम्यर्थे द्वितीया) | मार्गों में |
| जगम्यात् | प्राप्नुयात् (गमेर्लिङि शपःश्लुः) | प्राप्त हो |
| देवासः | देवाः (जसोऽसुगागमः) | देवता |
| मन्युम् | क्रोधम् | क्रोध को |
| दासस्य | अनार्यस्य (आ० को० | अनार्य के |
| घ्रुचम्नन् | भक्षयन्तु (चमु-अदने लेटि व्यत्ययेन श्ना, शकारोपजनश्छान्दसः) | भक्षण करें |
| ते | ते | वे |
| नः | अस्माकम् | हमारी |
| आ | आ + | -- |
| वक्षन् | आ+वक्षन्, प्रापयन्तु | लेजावें |

| | | |
|---|---|---|
| सुवितायं | शोभनगतये (यास्कः) | शुभगति के लिये |
| वर्णम् | जातिम् | जाति को |

संस्कृतार्थः ।

ते (आर्य-) मनुष्या रक्षार्थमिन्द्रम् (प्रति)आगतवन्तः (सः) इदानीं क्षिप्रमेव तान् मार्गेषु प्राप्नुयात्, देवा अनार्यस्य क्रोधं भक्षयन्तु, तेऽस्माकं जातिं शोभनगतये (च) प्रापयन्तु ॥ २ ॥

भाषार्थः ।

वे (आर्य) मनुष्य रक्षा के लिये इन्द्र के (प्रति) आए हैं (वह) अब शीघ्र ही उन को मार्गों में मिलें, देवता अनार्य के क्रोध को भक्षण करें (और) वे हमारी जाति को शुभ गति की ओर ले जावें ॥ २ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।११।११।११।११।

अवत्मनाभरतेकेतवेदा अवत्मनाभरतेफेनमुदन् । चीरेणस्नातः कुयवस्ययोषे हतेतेस्यातांप्रवणेशिफ-

फा॑याः । ३ ।

| | | |
|---|---|---|
| अ॑व | अव + | – |
| त्मना॑ | आत्मना (मन्त्रेष्वित्याकारलोपः) | अपने आप से |
| भरते | अव + भरते, अवलम्बते | सहारा लेता है |
| के॑तऽवेदाः | स्वरूपमेव धनं यस्य तथोक्तः | स्वरूप ही जिसका धन है ऐसा |
| अ॑व | अव + | – |
| त्मना॑ | आत्मना (आकारलोपः) | अपने आप से |
| भरते | अव + भरते, अवलम्बते | सहारा लेता है |
| फे॑नम् | फेनः (लिङ्गव्यत्ययः) | झाग |
| उदन् | उदके (उदकशब्दस्योदन्नादेशेकृते सुपामिति सप्तम्यालुक्) | जल में |

| | | |
|---|---|---|
| क्षीरेण | क्षीरेण | दूध से |
| स्नातः | स्नातः | स्नान करती हैं |
| कुयवस्य | कुयवस्य | कुयव की |
| योषे० | भार्य्ये | स्त्रियाँ |
| हते० | हते | नाशित |
| ते० | ते | वे दोनों |
| स्याताम् | स्याताम् | होवें |
| प्रवणे | निम्नप्रदेशे | गहराई में |
| शिफायाः | शिफायाः | शिफा की |

संस्कृतार्थः ।

स्वरूपमात्रधनयुक्तः (आर्य्यः) आत्मना (एव) अवलम्बते (यथा) जले फेन आत्मना (एव) अवलम्बते,(आर्य्यशत्रोः) कुयवस्य भार्य्ये क्षीरेण स्नातस्ते शिफाया निम्नप्रदेशे हते स्याताम् ॥ ३ ॥

भाषार्थः ।

केवल स्वरूप ही जिस का धन है ऐसा (आर्य) अपने सहारे पर है (जैसे) जल में झाग अपने (ही) सहारे होता है, (आर्य्य शत्रु) कुयव की दोनों स्त्रियाँ दूध से स्नान करती हैं वे शिफा की गहराई में (डूबकर) मरें ॥ ३ ॥

जैसे जल का फेन स्वरूपमात्र होता है इसी प्रकार दीन आर्य स्वरूप मात्र है और उस के व्रतहीन अनार्य शत्रु की स्त्रियाँ दूध से स्नान करती हैं इसीलिये ऋषि कोसते हैं कि वे नदी की गहराई में डूब कर मरें।

इन्द्रोदेवता निचृत्त्रिष्टुप्छन्दः ।११।११।१०।११

युयोपनाभिरुपरस्यायोः प्रपूर्वाभिस्तिरते राष्टि शूरः । अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥ ४ ॥

| | | |
|---|---|---|
| युयोप | लुलोप | टूट गया है |
| नाभिः | सम्बन्धः (आ०को०) | संबंध |
| उपरस्य | समीपतरस्य (आ०को०) | अधिक समीपी का |
| आयोः | मनुष्यस्य (,,) | मनुष्य का |
| प्र | प्र + | – |
| पूर्वाभिः | पूर्ववर्तिनीभिः (नदीभिः) | पूर्व की(नदियों) से |
| तिरते | प्र + तिरते पारंगच्छति | पार जाता है |
| राष्टि | राजते (शपोलुक्) | राज्य करता है |
| शूरः | शूरः | शूरबीर |
| अञ्जसी | अञ्जसी | अञ्जसी |
| कुलिशी | कुलिशी | कुलिशी |
| वीरऽपत्नी | वीरपत्नी | वीरपत्नी |

| | | |
|---|---|---|
| पयः | पयः | दूध को |
| हिन्वानाः | प्रीणयन्त्यः (हिवि प्रीणने) | प्रसन्न करती हुईं |
| उदऽभिः | उदकैःसह (उदक-शब्दस्योदन्नादेशः) | जलों के साथ |
| भरन्ते | वहन्ति | ले जाती हैं |

संस्कृतार्थः ।

समीपतरस्य (आर्य्य-) मनुष्यस्य (इन्द्रेण सह) सम्बन्धो लुलोप,(सः)शूरः पूर्ववर्तिनीभिः (नदीभिः) पारं गच्छति राजते (च), अञ्जसी कुलिशी वीरपत्नी (इत्येता नद्यः) (इन्द्रम्) प्रीणयन्त्यः (सत्यः) उदकैः सह (आर्यशत्रवे) पयो वहन्ति ॥ ४ ॥

भाषार्थः ।

अधिक समीप वर्ती (आर्य्य) मनुष्य का (इन्द्र के साथ) संबंध टूट गया है (वह) शूरबीर पूर्व की (नदियों) से पार जाकर राज करते हैं, अञ्जसी कुलिशी (और) वीरपत्नी (ये नदियाँ) (इन्द्र को) प्रसन्न करती हुईं जलों के साथ (आर्यशत्रु के लिये) दूध को ले जाती हैं ॥ ४ ॥

दस्युओं के अत्याचार से दुःखित कुत्सऋषि कहते हैं कि इन्द्र अपने निकटवर्ती आर्य्य के साथ संबंध को तोड़कर अनार्य शत्रु के देश में राज्य करते हैं, अंजसी कुलिशी, वीरपत्नी यह पंजाब से पूर्व देश में होने वाली नदियाँ प्रतीत होती हैं जहां दस्युओं की बहुत बस्ती थीं।

इन्द्रोदेवता त्रिष्टुपूछन्दः ।११।११।११।११

प्रतियत्स्यानीथाऽदर्शिदस्यो रो-

कोनाच्छासदनंजानतीगात्। अध

स्मानोमघवञ्चर्कृतादिन् मानोम-

घेवनिष्षपीपरादाः। ५।

| | | |
|---|---|---|
| प्रति | प्रति + | - |
| यत् | यदा | जब |
| स्या | सा | वह |
| नीथा | वीथिका<br>(नयतेः कथनु प्रत्ययः) | रस्ता |

| | | |
|---|---|---|
| अदर्शि | प्रति+अदर्शि, दृष्टाबभूव | देखागया |
| दस्योः | दस्युना (तृतीयार्थे षष्ठी) | दस्यु से |
| ओकः | आश्रयस्थानम् | आश्रय की जगह को |
| न | इव | कीन्याईं |
| अच्छ | अभिलक्ष्य | लक्ष रखकर |
| सदनम् | गृहम् | घर को |
| जानती | जानती | जानती हुई |
| गात् | गच्छति (लडर्थेलुङडभावः) | जाता है |
| अध | अथ (थस्यधत्वम्) | अब |
| स्म | अपि | भी |
| नः | अस्मान् | हम को |
| मघवन् | हे धनवन् ! | हे धनवाले |

| | | |
|---|---|---|
| च॒कृ॑तात् | कृतार्थान् कुरु | कृतार्थं करो |
| इत् | (पूरणः) | – |
| मा | मा | मत |
| नः॒ | अस्मान् | हम को |
| म॒घाऽइ॑व | धनानीव (शेर्लोपः) | धनों की न्याईं |
| नि॒ष्ष॒पी | विनिर्गतसपः, परस्त्रीकामः | पराई स्त्रियों की कामना वाला |
| परा॑ | परा+ | – |
| दाः॒ | परा+दाः, परित्यज (लोडर्थेलुङ्यडभावः) | त्याग करो |

संस्कृतार्थः ।

यदा दस्युना सा वीथिका दृष्टा (तदा प्रभृति सः) गृहं जानती (गौः) इव (आर्य्याणाम्) आश्रय-स्थानं गच्छति, हे धनवन्! इदानीमप्यस्मान् कृतार्थान् कुरु, परस्त्रीकामो धनानीवाऽस्मान् मा परित्यज ॥ ५ ॥

भाषार्थः ।

जब दस्यु से वह रस्ता देखा गया (तब से वह) घर को जानती हुई (गौ) की न्याईं (आर्य्यों के) आश्रय की जगह चला जाता है, हे धनवाले ! अब भी हम को कृतार्थ करो, हमें त्याग न करो जैसे पराई स्त्री की कामना वाला धनोंका (त्याग) करता है ॥ ५ ॥

आर्य्यलोग उत्तर देशों की हिम से भाग कर पंजाब के जंगलों में शरण ढूंढने को आए थे, जहां पर बस्ती बहुत कम थी, परन्तु दस्यु लोग यहां से भी उनको निकालना चाहते थे (देखो १।४।५)

जब से दस्युओं को आर्य्यों के गुप्त स्थान का रस्ता मिल गया था, तब से वह नित्य जाकर उन पर आघात करते थे, इसलिये इन्द्र से प्रार्थना है कि वह हमको दस्युओं द्वारा नष्ट न होने दें।

इन्द्रो देवता त्रिष्टुपछन्दः ।११।११।११।११

सत्वंनइन्द्रसूर्य्येसोअप्स्व नागास्त्वआभजजीवशंसे । माऽन्तरांभुजमारीरिषोनः श्रद्धितंतेमहतइन्द्रियाय। ६।

| सः | सः | वह |
|---|---|---|
| त्वम् | त्वम् | आप |
| नः | अस्मान् | हम को |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| सूर्ये | सूर्ये | सूर्य में |
| सः | सः | वह |
| अप्ऽसु | अप्सु | जलों में |
| अनागाः ऽत्वे | अपापित्वे | पाप रहित बनने में |
| आ | आ + | -- |
| भज | आ+भज, भागिनःकुरु | भागी बनाओ |
| जीवऽशंसे | मनुष्याणां स्तुतौ | मनुष्योंकीस्तुति में |

| | | |
|---|---|---|
| मा | मा | मत |
| अन्तराम् | अन्तर्वर्त्तमानाम् | भीतर रहिने वाली को |
| भुजम् | भुज्यते पाल्यत-इति भुक् सन्त-तिस्ताम् | सन्तान को |
| आ | आ + | — |
| रिरिषः | आ+रिरिषः, विनाशय (स्वार्थण्यन्तादूरिषे-र्लोडर्थेलुङ्यडभावः, ह्रस्वश्छान्दसः) | नाश करो |
| नः | अस्माकम् | हमारी |
| श्रद्धितम् | श्रद्धितम् | श्रद्धा की है |
| ते | तव | तेरे |
| महते | महते | महान के लिये |
| इन्द्रियाय | बलाय | बलके लिये |

संस्कृतार्थः ।

हे इन्द्र ! स त्वमस्मान् सूर्य्ये, सः (त्वम्) अप्सु, अपापित्वे, मनुष्याणां स्तुतौ (च) भागिनः कुरु, (त्वं गर्भरूपेण) अन्तर्वर्त्तमानामस्माकं प्रजां मा विनाशय (अस्माभिः) तव महते बलाय श्रद्धितम् (अस्ति) ॥ ६ ॥

भाषार्थः ।

हे इन्द्र ! वह आप हमें सूर्य्य में वह आप जलों में पाप रहित बनने में (और) मनुष्यों की स्तुति में भागी बनावें, आप (गर्भरूप से) भीतर रहिने वाली हमारी सन्तान को मत नाश करें (हमें) आपके महान बल में श्रद्धा है ॥ ६ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।११।११।११।११

अधामन्येश्रत्तेअस्माअधायि वृ-

षाचोदस्वमहतेधनाय । मानोअकृ-

तेपुरुहूतयोना विन्द्रक्षुध्यद्भ्योव-

यआसुतिंदाः । ७ ।

| | | |
|---|---|---|
| अध | अथ | अब |
| मन्ये | अवगतज्ञेयोऽस्मि | मैं समझा हूं |
| श्रत् | श्रत् + | — |
| ते | तव | तेरे |
| अस्मै | अस्मै | इसके ताईं |
| अधायि | श्रत् + अधायि, श्रद्धाकृताऽस्ति | मैंने श्रद्धा की है |
| वृषा | वीर्य्यवान् | वार्य्यवान |
| चोदस्व | प्रेरय (णेर्लोपः) | प्रेरण करो |
| महते | महते | महान के ताईं |
| धनाय | धनाय | धन के ताईं |
| मा | मा | मत |
| नः | अस्मान् | हम को |

| | | |
|---|---|---|
| अक्तौते | शून्ये | सूने में |
| पुरुऽहूत | हे बहुभिराहूत ! | हे बहुतोंसे बुलाए गए |
| योनौ | गृहे (निघं० ३।४) | घर में |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| क्षुध्यत्ऽभ्यः | बुभुक्षितेभ्यः (क्षुधबुभुक्षायाम्) | भूखों के ताईं |
| वयः | अन्नम् (सा०भा०) | अन्न को |
| आऽसुतिम् | पानम् (आ०को०) | पान को |
| दाः | देहि (लोडर्थेलुङ्यडभावः) | दीजिये |

संस्कृतार्थः ।

हे बहुभिराहूतेन्द्र ! (अहम्) इदानीमवगत-जेयोऽस्मि (मया) तवाऽस्मै (बलाय) श्रद्धाकृताऽस्ति, वीर्य्यवान् (त्वम्) अस्मान् महते धनाय प्रेरय, शून्ये गृहे बुभुक्षितेभ्यः (अस्मभ्यम्) अन्नं पानम् (च) मा देहि ॥ ७ ॥

भाषार्थः ।

हे बहुतों से बुलाए गए इन्द्र ! मैं अब समझा हूं मैंने आपके इस (बल) में श्रद्धा की है, वीर्य्यवान आप हमें बड़े धन के लिये प्रेरण करें, और सूने घर में (हम) भूखों के ताईं अन्न (और) पान को मत दें ॥ ७ ॥

(१) "सूने घर में हमें अन्न पान को मत दें" अर्थात हमारा घर अन्न पान आदि से कभी खाली न हो ।

इन्द्रोदेवता निचृत्त्रिष्टुप्छन्दः ।१०।११।११।११।

मानोवधीरिन्द्रमापरादा मानः प्रियाभोजनानिप्रमोषीः । आण्डा मानोमघवञ्छक्रनिर्भेन् मानःपात्रा भेत्सहजानुषाणि । ८ ।

| | | |
|---|---|---|
| मा | मा | मत |
| नः | अस्मान् | हम को |

| | | |
|---|---|---|
| वधीः | जहि (लोडर्थेलुङ्यडभावः) | मारो |
| इन्द्र | हे इन्द्र ! | हे इन्द्र |
| मा | मा | मत |
| परा | परा | – |
| दाः | परा+दाः, परित्यज ( ” ) | त्याग करो |
| मा | मा | मत |
| नः | अस्माकम् | हमारे |
| प्रिया | प्रियाणि (शेर्लोपः) | प्यारों को |
| भोजनानि | भोग्यानि | भोग्य पदार्थों को |
| प्र | प्र + | – |
| मोषीः | प्र+मोषीः, अपहर (मुषस्तेये लोडर्थेलुङ्यडभावः) | हरण करो |

| | | |
|---|---|---|
| आण्डा | गर्भरूपाण्यपत्यानि (शेर्लोपः) | गर्भरूपसन्तानों को |
| मा | मा | मत |
| नः | अस्माकम् | हमारे |
| मघऽवन् | हे धनवन् ! | हे धनवाले |
| शक्र | हे शक्तियुक्त ! | हे सामर्थ्य वाले |
| निः | निः+ | – |
| भेत् | निः + भेत्, क्षपय (भिदेर्लोडर्थेलङि सिपि विकरणस्यलुक्) | छिजाओ |
| मा | मा | मत |
| नः | अस्माकम् | हमारे |
| पात्रा | पान्तिरक्षन्त्याधेयं गर्भमितिपात्राणि स्त्रियः (शेर्लोपः) | स्त्रियों को |
| भेत् | विनाशय | विनाश करो |

| सह्ऽजा- नुषाणि | जानुभ्यांसीदन्ती तिजानुषागर्भास्तैः सह वर्त्तमानानि | गर्भवतियों को |
|---|---|---|

संस्कृतार्थः ।

हे शक्तियुक्त ! धनवन्निन्द्र ! (त्वम्) अस्मान्मा जहि मा परित्यज, अस्माकं प्रियाणि भोग्यानि माऽपहर, अस्माकं गर्भरूपाण्यपत्यानि मा क्षपय, अस्माकं गर्भवतीः स्त्रियः (च) मा विनाशय ॥८॥

भाषार्थः ।

हे सामर्थ्यवाले धनवान् इन्द्र ! आप हमको न मारें, न त्याग करें, आप हमारे प्यारे भोग्य पदार्थों को हरण न करें,आप हमारी गर्भरूप सन्तानों को न छिजावें (और) हमारी गर्भवती स्त्रियों को न नाश करें ॥ ८ ॥

इन्द्रोदेवता त्रिष्टुप्छन्दः ।११।११।११।११।

अर्वाङेहिसोमकामंत्वाऽऽहु रयं

सुतस्तस्यपिबामदाय । उरुव्यचा

जठर आ वृषस्व पितेव नः शृणुहि हू-

यमानः । ९ ।

| | | |
|---|---|---|
| अर्वाङ् | अभिमुखम् | सामने |
| आ | आ + | – |
| इहि | आ+इहि,आगच्छ | आओ |
| सोमऽकामम् | सोमकामम् | सोम की कामना वाले को |
| त्वा | त्वाम् | तुझ को |
| आहुः | कथयन्ति | कहते हैं |
| अयम् | अयम् | यह |
| सुतः | निष्पीडितः | निचोड़ा गया |
| तस्य | तम् (कर्मणिषष्ठी) | उस को |

# ऋ०सं०५५,५६ अङ्कयोः शुद्धयशुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४५५ | १४ | अदितिः | अदितिः |
| २४५७ | ९ | स्तोतृणां | स्तोतॄणां |
| ,, | १० | स्तोतॄस्य | स्तोतृस्य |
| ,, | २० | शुशु | शुशु |
| २४६१ | २ | अग्निःम | अग्निमः |
| ,, | ६ | मन्दति | मन्दतिः |
| २४६७ | ९ | पारयच, | पारय, |
| २४६८ | २ | वया | वया |
| ,, | १२ | पष | पर्ष |
| २४६९ | ४ | ज्वलत | ज्वलतु |
| २४७३ | २ | पृष्टो | पृष्टो |
| ,, | ४ | पृष्टो | पृष्टो |
| २४७५ | १ | हसा | हिंसा |
| २४७६ | १० | अस्त | अस्तु |
| २४८१ | २ | दुः | दुः |
| २४८२ | १ | स० | सू० |
| ,, | १२ | णषु | णेषु |
| ,, | १३ | शत्रन | शत्रून |
| २४८३ | ३ | पोत्रा | पौत्रा |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४८४ | १३ | च | च |
| २४८६ | १८ | स्व | स्वे |
| २४९० | १८ | भवत | भवतु |
| २४९४ | १४ | सऽनी | सऽनी |
| २४९५ | १ | शाघ्रता | शीघ्रता |
| २४९६ | १ | पतिः | पतिः |
| २४९९ | १७ | युक्तः | युक्तः |
| २५०० | १० | न्द्रऊती | न्द्रऊती |
| २५०४ | १० | ऽपिः | ऽपि |
| ,, | ११ | दाक्षणे | दक्षिणे |
| ,, | ,, | सगृ | संगृ |
| २५१० | ६ | सहस्र | सहस्र |
| २५२० | १३ | धूर्मिः | धूर्भिः |
| ,, | १६ | वाला | वाली |
| २५२४ | १२ | हुत | हूत |
| २५२७ | ३ | हिसकां | हिसकौं |
| ,, | ५ | (आर्य्यों) | (आर्यौं) |
| ,, | ११ | उत | उत |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५२८ | १६ | आन्द्रि | आद्रि |
| २५२९ | ३ | पथिवी | पृथिवी |
| २५३० | २ | इन्द्रौं | इन्द्रो |
| ,, | ,, | अङ्गि | आङ्गि |
| ,, | १२ | शासनु | शासमनु |
| ,, | १४ | ऽङ्गिरा | ऽङ्गिर |
| ,, | १८ | साह | साहा |
| " | ,, | बिद्युत् | विद्युत् |
| २५३१ | ४ | वज्र | वज्र |
| ,, | ८ | पितऽ | पितुऽ |
| २५३३ | ११ | हुई | होनेवाली |
| २५३५ | ६ | अशुषम् | अशुषम् |
| २५३६ | ११ | यस्य | यस्य |
| ,, | १२ | सश्च | सश्च |
| २५३७ | १ | द्यावा | द्यावा |
| ,, | २ | (पर्व | (पूर्व |
| २५३९ | १ | सुन्व | सुन्व |
| २५४० | १ | ठरा | ठैरा |
| २५४४ | १ | सन्द् | सन्द् |
| ,, | ११ | हूयते | हूयते |
| २५४५ | ४ | क्वमु:) | (क्वसु:) |
| ,, | ८ | (शेलोंप:) | (शेलोंप: |

